Bombay Sanskrit Series.

No. LXII.

# THE REKHÂGAṆITA

## VOL. II

*Price 9 Rupees.*

# THE REKHAGANITA

OR

## GEOMETRY IN SANSKRIT
## COMPOSED BY SAMRÂḌ JAGANNÂTHA

## VOLUME II. BOOKS VII–XV.

UNDERTAKEN FOR PUBLICATION

BY


THE LATE

HARILÂL HARSHÂDARÂI DHRUVA

B. A., LL. B., D. L. A. ( SWEDEN ), M. R. A. S.

( LONDON AND BOMBAY ),

CITY JOINT JUDGE AND SESSIONS JUDGE, BARODÂ,


**Edited and carried through the press, with Introduction, and brief notes in English**

BY


**KAMALÂS'AṄKARA PRÂṆAS'AṄKARA TRIVEDÎ, B. A.,**

FELLOW OF THE UNIVERSITY OF BOMBAY, HEAD MASTER, NADIÂD HIGH SCHOOL ( FORMERLY PROFESSOR OF ORIENTAL LANGUAGES, SÂMALADÂS COLLEGE, BHÂVA-NAGAR, AND ACTING PROFESSOR OF ORIENTAL LANGUAGES, ELPHIN-STONE AND DECCAN COLLEGES ).



**1st Edition**—500 COPIES.





Bombay.

GOVERNMENT CENTRAL BOOK DEPÔT.

1902.





*Price 9 Rupees.*

Bombay Sanskrit Series No. LXII.

श्रीः

# रेखागणितम्

सम्राड्जगन्नाथविरचितं

( द्वितीयभागात्मकं सप्तमाध्यायमारभ्य पञ्चदशाध्यायपर्यन्तम् )

स्वर्गवासिमहाशयध्रुवोपपदेन हर्षदरायात्मजेन हरिलालेन

संस्करणार्थमङ्गीकृतं

त्रिवेद्युपपदधारिणा

## प्राणशंकरसूनुना कमलाशंकरेण संशोधितं

स्वनिर्मिताङ्ग्लभाषाटिप्पण्या च समुपेतम् ।

तच्च

मुम्बापुरीस्थराजकीयग्रन्थशालाधिकारिणा

"निर्णयसागर"ख्यमुद्रणयन्त्रालये मुद्रयित्वा

शाके १८२४ वत्सरे १९०२ खिस्ताब्दे प्राकाश्यं नीतम् ।

---

प्रथमा आवृत्तिः

---

मूल्यं ९ रूप्यकाः ।

# INTRODUCTION.

After the publication of the first volume and a major portion of the second volume I received a Ms. of the work in charge of the Ânandâs'rama Library of Poona through my friend, Prof. S'ridhara R. Bhâṇḍârakar, M. A. It is found to coincide mostly with D. Its *Varæ Lectiones* are given in Appendix II. The various readings of V. in Books VII., VIII. and IX. are given in Appendix I. and those of the remaining books in foot-notes.

I had a mind to give a rendering of this volume into English in my English notes for the benefit of those readers who do not know Sanskrit. But as the idea did not meet with the approval of one of the Superintendents of the Series, who was consulted on the point, it was given up. The notes are consequently very brief, containing mostly as they do, English equivalents of technical Sanskrit terms.

Râipur,
AHMEDÂBÂD,
*28th March 1902.*

K. P. TRIVEDI.

# अनुक्रमणिका.

## ॥ अथ सप्तमोऽध्यायः प्रारभ्यते ॥

### तत्रैकोनचत्वारिंशत्क्षेत्राणि सन्ति[1]।

### अत्राङ्कैर्गणितप्रकारा निरूपिताः ॥

१ अङ्को नाम रूपाणां समुदायः। तन्मते रूपेऽङ्कत्वाभावः। अन्ये तु गणनायोग्यमङ्कं वदन्ति तन्मते रूपेप्यङ्कत्वमस्ति गणनायोग्यत्वात्।

२ यत्र लघ्वङ्को बृहदङ्कादसकृत् शोधितः सन्[2] बृहदङ्को निःशेषः स्यात् तदा लघ्वङ्को बृहदङ्कस्यांशोऽस्ति। बृहदङ्को गुणगुणितलघ्वङ्कतुल्योऽस्ति।

३ यस्य भागद्वयं समानं भवति स समाङ्को ज्ञेयः।

४ यस्य भागद्वयं समानं न भवति स विषमाङ्को ज्ञेयः।

५ समाङ्को यद्येकेन हीनोऽधिको वा भवति सोऽपि विषमाङ्को ज्ञेयः।

६ समाङ्को द्विविधः। एकः समसमः ८। एकः समविषमः ६।

७ समसमो यथा। समाङ्कः समेन ह्रियमाणः समा लब्धिः प्राप्यते स समसमः।

८ यः समाङ्कः समेन ह्रियमाणः विषमा लब्धिः प्राप्यते स समविषमो ज्ञेयः।

९ अथ विषमविषमाङ्कलक्षणम्। विषमाङ्को विषमेण ह्रियमाणः विषमा लब्धिः प्राप्यते स विषमविषमाङ्कः। यथा नवाङ्कः (९) त्रिभक्तः त्रयं प्राप्यते।

१० योऽङ्को रूपातिरिक्ताङ्केन निःशेषो न भवति स प्रथमोऽङ्को ज्ञेयः। यथैकादशाङ्कः।

११ यो रूपातिरिक्ताङ्केन विभागार्हः स योगाङ्को ज्ञेयः।

---

१ तत्र ऊन° K. २ Omitted in K.

१२ यावङ्कौ रूपातिरिक्ताङ्केन भक्तौ निःशेषौ भवतस्तावङ्कौ मिलित-
संज्ञौ ज्ञेयौ ।

१३ यावङ्कावेकातिरिक्तः कोऽपि हरो निःशेषं न करोति तौ भिन्ना-
ङ्कौ ज्ञेयौ ।

१४ योऽङ्कः स्वेनैव गुणितः फलं तस्यैव वर्गो भवति ।

१५ योऽङ्कः स्ववर्गेण गुणितः घनसंज्ञो भवति ।

१६ गुण्याङ्कगुणकाङ्कयोर्घातो गुणनफलं क्षेत्रफलं भवति ।

१७ गुण्यगुणकौ भुजसंज्ञौ भवतः ।

१८ क्षेत्रफलं केनचिदङ्केन गुणितं घनफलं भवति ।

१९ यत्र प्रथमाङ्को यद्गुणितो द्वितीयाङ्कतुल्यो भवति तद्गुणगुणितस्तृ-
तीयाङ्कश्चतुर्थाङ्कतुल्यो भवति तदा तेऽङ्काः सजातीया भवन्ति ।

२० क्षेत्रफलघनफले ते सजातीये भवतो ययोर्भुजावेकरूपौ सजा-
तीयौ भवतः ।

२१ योऽङ्कः स्वलब्धियोगतुल्यो भवति स पूर्णसंज्ञो ज्ञेयः । यथा षट् ॥

॥ इति परिभाषा ॥

## अथ प्रथमं क्षेत्रम् ॥ १ ॥

**ययो राश्योः परस्परं भाजितयोरन्ते रूपं शेषं स्यात् तौ राशी भिन्नसंज्ञौ ज्ञेयौ ।**

यथा **अबं** बृहद्राशिः कल्पितः । **जदं** लघुराशिः कल्पितः । **जदं अबमध्ये** मुहुः शोधितं शेषं **तअं** तत् **जदा**दूनमवशिष्टम् । पुनस्त**अं जदा**न्मुहुः शोधितं शेषं **जवं** तत् **तआ**दूनं जातम् । एत **तअ**मध्ये मुहुः शोधितं शेषं **कअं** रूपम् । तस्मात् **अबजद**राशी भिन्नौ स्तः ।

अस्योपपत्तिः ।

यद्येतौ भिन्नौ न भवतः तदाऽन्यौ राशी कल्पनीयौ । **हझ**मुभयो-

रपवर्तनाङ्कः कल्पितः । **हझ**ेनापवर्त्तितं **जदं** निःशेषं भविष्यति । **जदं** **बत**मपि निःशेषं करिष्यति । इदमेव

अ . क . . त . . . . . . . . . . ब
ज . . व . . . द
हझ—

**हझं** **अब**मपि निःशेषं करोति । तस्मात् **तअं** निःशेषं करिष्यति । मिलितराश्योरपवर्त्ताङ्कः **तअं** **दवं** निःशेषं करोति । तस्मात् **हझं** **दवं** निःशेषं करिष्यति । पूर्वं **हझं** **जदं** निःशेषं चकार । तस्मात् **जव**मपि निःशेषं करिष्यति । **जवं** च **तकं** निःशेषं करिष्यति । तस्मात् **हझं** **तक**मपि निःशेषं करिष्यति । **तअं** निःशेषं पूर्वं कृतवान् । तस्मात् **कअं** रूपं निःशेषं करिष्यति । इदमशुद्धम् । यतो रूपं निःशेषं कोऽप्यङ्को न करोति । इदमेवास्माकमिष्टम् ॥

## अथ द्वितीयं क्षेत्रम् ॥ २ ॥

**तत्र मिलितराश्योरपवर्त्ताङ्को महदङ्कः कल्प्योऽस्ति येन भक्तौ मिलितराशी निःशेषौ भवतः ।**

यथा **अबजदौ** मिलितराशी कल्पितौ । तत्र यदि **जदं** न्यूनराशिः **अबं** महद्राशिं निःशेषं करोति तदायमेव महदङ्कोऽस्ति । यदि **जदं** **अबं** निःशेषं न करोति किं च **बहं** निःशेषं करोति **अहं** शेषं **जदा**न्न्यूनमवशिष्टम् । तज्जदं निःशेषं न करोति किं तु **दझं** निःशेषं करोति । **जझं** शेषं **अहा**न्न्यूनमवशिष्टं च भवति । एवं तावन्निःशेषक्रिया कार्या यावद्रूपातिरिक्तान्याङ्केन निःशेषता भवेत् । **जझे**न **अहं** निःशेषं कृतमिति कल्पितम् । तदा इदमेव **जझं** महदङ्को जातः । अनेनोभौ निःशेषौ जातौ ।

अ . . . . . . . . ब
ज . . . . द
अ . . . . ह . . . . . . ब
ज . . झ . . . . द
ब . . . त

### अस्योपपत्तिः ।

**जझं** **अहं** निःशेषं करोति । **अहं** च **दझं** निःशेषं करोति । तस्मात् **जझं** **दझ**मपि निःशेषं करिष्यति । **जद**मपि निःशेषं करिष्यति ।

जदं हबं निःशेषं करोति। तस्मात् जझं हबं निःशेषं करिष्यति । पूर्वं जझं अहं निःशेषमकरोत्। तस्मात् जझं अबमपि निःशेषं करिष्यति ।

इदं जझं महदङ्कः कुतो जातः। अत्रोच्यते। यदि महान् न भवति तदाऽस्मादधिकं बतमुभयोरपवर्त्तकं कल्पितम् । इदं हबं निःशेषं करिष्यति। अहमपि निःशेषं करिष्यति। दझमपि च निःशेषं करिष्यति । जदं निःशेषमकरोत् । तस्माज्जझमपि निःशेषं करिष्यति। कल्पितं च जझादधिकम् । इदमनुपपन्नम् । तस्माज्जझं विनाऽन्यः कश्चन महदङ्क उभयो राश्योरपवर्त्ताङ्को[1] न भविष्यति । इदमेवाऽस्माकमिष्टम् ॥

## अथ तृतीयं क्षेत्रम् ॥ ३ ॥

**अथ राशिद्वयाधिकमिलितराश्यपवर्त्तनार्थं महदङ्कः[2] कल्पनीयः ।**

यथा अं बं जं त्रयो राशयः कल्पिताः । प्रथमं अबराश्योरपवर्त्तनार्थं महदङ्को दं कल्पनीयः । यदि दं जं निःशेषं करोति तदाऽयमेव महदङ्को ज्ञेयः। यद्येवं महदङ्को न स्यात्तदा हं महदङ्कः कल्पितः । अयमं[3] बं निःशेषं करोति[4] यो महदङ्क एतद्द्वयं निःशेषं करोति दमपि स एवाङ्को निःशेषं करिष्यति । तस्माद् हं महदङ्को दं लध्वङ्कं निःशेषं करिष्यति । इदं बाधितम् ।

अ ........
ब ......
ज ....
द ..
ह ...
अ ........ ... ... ...
ब ...........
ज ........
द ......
ह ..
झ—

यदि दं जं निःशेषं न करोति तदैतद्द्वयनिःशेषकारको महदङ्क उत्पाद्यः । तद् हं कल्पितम् । इदं दं निःशेषं करिष्यति । अं बमपि निःशेषं करिष्यति । जमपि निःशेषं करिष्यति । तस्माद्राशित्रयनिःशेषकारकोऽयं जातः । अस्मादन्यो महदङ्को न भविष्यति । यदि

---

१ °रपवर्त्तको K. २ महदङ्ककल्पनं क्रियते । K. ३ अबं D. ४ करिष्यति K.

भवति तदा झं कल्पितम् । इदं अं बं निःशेषं करोति । दं निःशेषं करिष्यति । जं निःशेषं करोति । तस्मात् ह्रमपि निःशेषं करिष्यति । अयं ह्रादधिकोऽस्ति । इदमशुद्धम् । तस्मान्महदङ्को हं भविष्यति ।

## अथ चतुर्थं क्षेत्रम् ॥ ४ ॥

**लघुराशिर्महद्राशेरंशोऽस्ति वा गुणगुणितांशोऽस्ति ।**

यथा **जदं अबांऽशो** वांऽशा भवति । यदि **जदं अबं** निःशेषं करोति तदेदं तस्यांशो भवति । यदि निःशेषं न करोति तदा **वचिह्नतचिह्नो**-पर्यस्य विभागाः कार्याः । यदि **अब-जदौ** राशी भिन्नौ स्तस्तदा विभागा रूपमिताः कल्पनीयाः । यदि मिलितराशयः स्युस्तदाऽनयोरपवर्त्ता-ङ्केन **हझेन** तुल्या विभागा कार्याः । तदा प्रत्येकं **जवं वतं तदं अब**-स्यांशा भविष्यन्ति । योगश्चांशा भविष्यन्ति ॥

अ .... .... ब
ज .... द
अ ........ ब
ज .. व .. त .. द
ह .. झ

## अथ पञ्चमं क्षेत्रम् ॥ ५ ॥

**राशिद्वयमन्यराशिद्वयस्यैकरूपांशो यदि भवति तदा तयो-र्योगो राशिर्भविष्यति ।**

यथा **अबं जदस्यांशः** कल्पितः । तथैव **हझं वतस्यांशः** कल्पितः । तस्माद् **अबहझयोगो जदवतयोगस्य** स एवांशो भविष्यति ।

अस्योपपत्तिः ।

**जदस्य कचिह्नोपरि अबतुल्यविभागाः** कार्याः । **वतस्य लचिह्नो**-परि **हझतुल्यविभागाः** कार्याः । तस्मात् **जकवलयोर्योगो अबहझयोगतुल्यो** भविष्यति । एवं **कदलतयोर्योगोऽपि** । तस्मात् जदवतयोर्योगे **अबहझयोर्योग** एकरूपो भविष्यति । इदमेवास्माकमिष्टम् ॥

अ ... ब
ज ... क ... द
ह .... झ
व .... ल .... त

---

१ °रपवर्त्तनाङ्केन K.

## अथ षष्ठं क्षेत्रम् ॥ ६ ॥

**यदि राशिद्वयं राशिद्वयस्य यावदंशो भवति तदा द्वयोर्योगो राशिद्वययोगस्य स एव यावदंशो भविष्यति ।**

यथा अबं जदस्य यावदंशः कल्पितस्तदा हझं वतस्य तावदंशः कल्पनीयः । तस्मात् अबहझयोगोऽपि जदवतयोगस्य स एव यावदंशो भविष्यति ।

अ ... क ... ब
ज ......... द
ह .... ल .... झ
व .... .... .... त

अस्योपपत्तिः ।

अबस्य कचिह्नोपरि जदांशैस्तुल्या विभागाः कार्याः । हझे लचिह्नोपरि वतांशतुल्या विभागाः कार्याः । अकं जदस्य हलं वतस्य चैकांशो भविष्यति । तस्मात् अकहलयोगो जदवतयोगस्य स एवांशो भविष्यति । पुनर् अकं कबं हललझयोरेकरूपमस्ति । तस्मात् द्वयोर्योगो जदवतयोगस्य एकरूपा यावदंशा भविष्यन्ति । इदमेवास्माकमिष्टम् ॥

## अथ सप्तमं क्षेत्रम् ॥ ७ ॥

**राशिद्वयं तथा भवति यथैकराशिर्द्वितीयराशेरंशो भवति । अन्यराशिद्वयं तथा भवति यथैकराशिर्द्वितीयराशेरप्येकोंऽशो भवति । न्यूनं तद्राशिद्वयं पूर्वराशिद्वयमध्ये चेच्छोध्यते तदा शेषं शेषस्य स एवांशो भविष्यति ।**

यथा अबं जदस्यांशः अहं जझस्य स एवांशोऽस्ति । अहं अबाच्छोधितं जझं जदाच्छोधितं तदा हबशेषं झदशेषस्य स एवांशो भविष्यति ।

अ .... ह .. ब
व .... ज ........ झ .... द

अस्योपपत्तिः ।

हबं जवस्य सोंऽशः कल्पितः योंऽशः अहं जझस्यास्ति । तस्माद् अबं वझस्य स एवांशो भविष्यति । जदस्यापि स एवांश आसीत् ।

**वझजदे** तुल्ये भविष्यतः । **जझ**उभयोः शोध्यते । तदा **वजं झद**-समानमवशिष्यते । तस्मात् **हबं झदस्य** स एवांशो भविष्यति । इदमेवास्माकमिष्टम् ॥

प्रकारान्तरम् ॥

यदि **हबं झदस्य** स एवांशो न भवति तदा कल्पितं **हबं झतस्य** स एवांशोऽस्ति । तस्मात् **अबं जतस्य** स एवांशो भविष्यति । **अबं जदस्यापि** स एवांश आसीत् । तस्मात् **जदजते** समाने भविष्यतः । इदमशुद्धम् ॥ अस्मदिष्टमेव समीचीनम् ॥

अ .... ह .. ब
व .... ज .... .... झ ... त. द

## अथाष्टमं क्षेत्रम् ॥ ८ ॥

**तथा राशिद्वयं चेद्भवति यथैकराशिर्द्वितीयराशेर्यावदंशो भवति । अनयोर्मध्ये तथा राशिद्वयं शोध्यं तत्रैकराशिर्द्वितीयराशेर्यावदंशो भवति । तदा शेषं शेषस्य तादृग् यावदंशो भविष्यति ।**

यथा **अबं जदस्य** यावन्तोंऽशा भवन्ति तावन्त एव **अहं जझ**स्यांशा यदि भवन्ति तदा **हबं झदस्य** तावन्त एवांशा अवशिष्टा भविष्यन्ति ।

अस्योपपत्तिः ।

**वतं अबतुल्यं** कार्यम् । इदं **जदां**शानुसारेण **कचिह्ने** विभक्तं कार्यम् । **अहं लचिह्ने जझां**शानु[1]सारेण विभक्तं कार्यम् । तदा यावन्तौ **वककतौ** तावन्तौ **अलल्हौ** भविष्यतः । **वकं जदस्यां**शस्तथास्ति यथा **अलं जझस्यां**शोऽस्ति । **जदं जझा**दधिकमस्ति । तस्माद् **वकं अला**दधिकं भविष्यति ।

अ ...... ल ...... ह .... ब
ज ................. झ ...... द
व ...... म .. क .. न ...... त

---

१ °नुकारेण D.

वमं अलतुल्यं कल्पयेत्। तस्माद् मकं शेषं झदस्य सोंऽशो भविष्यति योंऽशो वकं जदस्यास्ति। एवं लहतुल्यं तनं कल्पितम्। कनं शेषं झदस्य स एव भविष्यति तकं जदस्य योऽस्ति। अहतुल्यवमतने[1] जझस्यांशौ भवतस्तथा हबतुल्यमनं झदस्यांशो भविष्यति। इदमेवास्माकमिष्टम्॥

## अथ नवमं क्षेत्रम्॥ ९॥

**यद्यङ्कद्वयमिष्टाङ्कद्वयस्य तुल्यांशं भवति वा यावदंशतुल्यं भवति तदांशोऽपि अंशस्य स एवांशो भवति य इष्टाङ्क इष्टाङ्कस्यांशो भवति।**

यथा अबं जदस्यांशोऽस्ति हझं वतस्य स एवांशोऽस्ति। तस्मात् अबं हझस्य स एवांशो भविष्यति वा यावदंशा भविष्यन्ति यो जदं वतस्यास्ति।

अस्योपपत्तिः।

यदि जदस्य कचिह्नोपरि अबतुल्यविभागः क्रियते। वतस्य लचिह्नोपरि हझतुल्यो विभागः क्रियते तदा जकं वलस्य सोंऽशो भवति अथवा यावदंशो भवति यथा अबं हझस्यास्ति। तस्मात् जदं वतस्य स एवांशो भविष्यति अथवा यावदंशो भविष्यति। इदमेवास्माकमिष्टम्॥

अ....ब
ज .... क .... द
ह ..... झ
व ..... ल ..... त

## अथ दशमं क्षेत्रम्॥ १०॥

**यद्यङ्कद्वयं अभीष्टाङ्कद्वयस्य गुणगुणितांशतुल्यं भवति तयोर्यदि विनिमयः क्रियते तदा यावदंशा यावदंशानां स एवांशो भवति। अथवा यावदंशास्तथा भविष्यन्ति यथैको द्वितीयस्य।**

---

1 जझस्य यथा भवतस्तथा &c. K.

यथा अबं यावदंशा जदस्यास्ति हझं तावन्त एव यावदंशा वतस्यास्तीति। तस्मात् अबं हझस्य स एवांशो भविष्यति अथवा तथा यावदंशा[1] भविष्यन्ति यथा जदं वतस्यास्ति।

अस्योपपत्तिः।

अबस्य कचिह्नोपरि जदांशतुल्या विभागाः कार्याः। हझस्य लचिह्ने वतांशतुल्या विभागाः कार्याः। प्रत्येकम् अकं कबं प्रत्येकं हललझयोः स एवांशो भविष्यति वा तथा यावदंशा भविष्यन्ति यथा अबं हझस्यास्ति। यथा जदं वतस्यास्ति।

अ .. क .. ब
ज ... ... द
ह ..... ल ..... झ
व ............... त

तस्मात् अबं हझस्य स एवांशो भविष्यति अथवा तथा यावदंशा भविष्यन्ति यथा जदं वतस्यास्ति। इदमेवास्माकमिष्टम्॥

## अथैकादशं क्षेत्रम्॥ ११॥

**यद्यङ्कद्वयमध्येऽङ्कद्वयमेकनिष्पत्तिरूपं शोध्यते तदा शेषे तन्निष्पत्तिरूपे भविष्यतः।**

यथा अबजदयोर्मध्ये अहजझे शोध्येते। अबजदयोर्निष्पत्तिः अहजझतुल्या कल्पिता। तदा हबझदयोर्निष्पत्तिरेतन्निष्पत्तितुल्यैव भविष्यति।

अस्योपपत्तिः।

यतः अबं जदस्य स एवांशो वा यावदंशोऽस्ति यः अहं जझस्यास्ति। तस्मात् शेषं हबं झदस्य स एवांशो वा यावदंशो भविष्यति। तस्मात् अनयोर्निष्पत्तिः सैव निष्पत्तिर्भविष्यति। इदमेवास्माकमिष्टम्॥

अ .... ह .. ब
ज ...... झ ... द

---

[1] °शो भविष्यति K.

## अथ द्वादशं क्षेत्रम् ॥ १२ ॥

**यावन्तोऽङ्का एकनिष्पत्तौ भवन्ति तेषां मध्ये प्रथमाङ्कयोगस्य द्वितीयाङ्कयोगेन सैव निष्पत्तिर्भविष्यति ।**

यथा अबयोर्निष्पत्तिर्जदयोर्निष्पत्तितुल्या कल्पिता । तस्मात् अजयोगस्य बदयोगेन निष्पत्तिः अबनिष्पत्तितुल्या भविष्यति ।

अस्योपपत्तिः ।

योंऽशो वा यावदंशा अं बस्यास्ति स एवांशो वा यावदंशा जं दस्यास्ति । यदि योगः क्रियते तदा अजं बदस्य स एवांशो वा यावदंशो भविष्यति यथा अं बस्यास्ति । तस्मात् अजयोगवदयोगयोर्निष्पत्तिः अबतुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

अ .. ज ....
ब ... द ......

## अथ त्रयोदशं क्षेत्रम् ॥ १३ ॥

**यदि चतुर्णामङ्कानां मध्ये प्रथमद्वितीययोर्निष्पत्तिस्तृतीयचतुर्थयोर्निष्पत्तितुल्या भवति । तयोर्यदि विनिमयः क्रियते प्रथमतृतीययोर्निष्पत्तिर्द्वितीयचतुर्थयोर्निष्पत्तितुल्या भविष्यति ।**

यथा अबनिष्पत्तिर्जदनिष्पत्तितुल्या कल्पिता । तदा अजनिष्पत्तिर्बदनिष्पत्तितुल्या भविष्यति ।

अस्योपपत्तिः ।

अं बस्य स एवांशो वा यावदंशोऽस्ति यो जं दस्यास्ति । यदाऽनयोर्व्यत्यासः क्रियते तदा अं जस्य स एवांशो वा यावदंशो भवति यो बं दस्यास्ति । तस्मात् अजयोर्निष्पत्तिर्बदनिष्पत्तितुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

अ ..
ब ...
ज .....
द ........

प्रकारान्तरम् ।

अनेनैव प्रकारेण योगान्तरयोर्निष्पत्तिनिश्चयः[1] कार्यः । यथा **अब**-**बजनिष्पत्तिर्दहहझनिष्पत्तितुल्या** कल्पिता । यद्यनयोर्योगः क्रियते वान्तरं क्रियते तदा **अजजबयोर्निष्पत्तिर्दझझहनिष्पत्तितुल्या** भविष्यति ।

अ .. ब ...... ज
द ... ह ........ झ

अस्योपपत्तिः ।

यदि व्यत्यासः क्रियते तदा **अबदहनिष्पत्तिर्बजहझनिष्पत्ति**-तुल्या भविष्यति । तस्मात् **अजदझयोर्निष्पत्तिर्बजहझनिष्पत्तितुल्या** भविष्यति । तस्मात् **अजबजनिष्पत्तिर्दझहझनिष्पतितुल्या** भविष्यति । इदमेवास्माकमिष्टम् ॥

## अथ चतुर्दशं क्षेत्रम् ॥ १४ ॥

**यत्र द्विप्रकारकाङ्का भवन्ति तत्र यदि प्रथमप्रकारे प्रथम-द्वितीययोर्निष्पत्तिर्द्वितीयप्रकारे प्रथमद्वितीयनिष्पत्तितुल्या भवति प्रथमप्रकारे द्वितीयतृतीयनिष्पत्तिर्द्वितीयप्रकारे द्वि-तीयतृतीयनिष्पत्तिसमाना भवति तत्र यदि मध्यमनिष्पत्ति-स्त्यज्यते तदा प्रथमप्रकारे आद्यन्तनिष्पत्तिर्द्वितीयप्रकारस्या-द्यन्तनिष्पत्तिसमाना भवति ।**

यथा **अबजम्** एकप्रकारकाङ्काः कल्पिताः । **दहझं** द्वितीयप्रका-रकाङ्काः कल्पिताः । तत्र **अबयोर्निष्पत्तिर्दह**-निष्पत्तितुल्या कल्पिता । **बजयोर्निष्पत्तिर्हझ**-निष्पत्तितुल्या कल्पिता । तस्मात् **अजनिष्पत्ति**-**र्दझ**निष्पत्तितुल्या भविष्यति ।

अ .........
ब ......
ज ...
द ......
ह ....
झ ..

अस्योपपत्तिः ।

यदि निष्पत्त्या विनिमयः[2] क्रियते तदा **अदयोर्निष्पत्तिर्बह**निष्पत्ति-

१ °र्निष्पत्तेर्नि° K. २ निष्पत्तिविनिमयः K.

तुल्या भविष्यति । बहनिष्पत्तिर्जझनिष्पत्तितुल्या भविष्यति । तस्मात् अदनिष्पत्तिर्जझनिष्पत्तितुल्या भविष्यति । यदि व्यत्यासः क्रियते तदा अजनिष्पत्तिर्दझनिष्पत्तितुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

### अथ पञ्चदशं क्षेत्रम् ॥ १५ ॥

**यदि रूपं द्वितीयाङ्कं यावद्वारं निःशेषं करोति तावद्वारं तृतीयाङ्कश्चतुर्थाङ्कं निःशेषं करोति चेत्तत्र विनिमये क्रियमाणे रूपं यावद्वारं तृतीयं निःशेषं करिष्यति तावद्वारं द्वितीयं चतुर्थं निःशेषं करिष्यति ।**

यथा **अबं** कल्पितम् । एनमेकाङ्कस्तावद्वारं निःशेषं करोति यावद्वारं **जदं हझं** निःशेषं करोति । तस्मादेकाङ्को **जदं** तथा निःशेषं करिष्यति यथा **अबं हझं** निःशेषं करिष्यति ।

अ . व . त . ब
ज .. द
ह .. क .. ल .. झ

अस्योपपत्तिः ।

**हझ**मध्ये यावन्ति **जदा**नि सन्ति तावन्ति **अब**मध्ये रूपाणि सन्ति । यावन्तो **हझ**स्य **कल**चिह्नोपरि **जद**तुल्या विभागाः क्रियन्ते तावन्तः **अब**स्य **वत**चिह्नचिह्नोपरि रूपाङ्कतुल्या[1] विभागाः कार्याः । तस्माद् रूपं **जदं** तथा निःशेषं करिष्यति यथा प्रत्येकम् **अववततबा**नि **हककललझा**न् निःशेषान् करिष्यन्ति । अपि च संपूर्णम् **अबं** संपूर्णं **हझं** निःशेषं करिष्यति । इदमेवास्माकमिष्टम् ॥

### अथ षोडशं क्षेत्रम् ॥ १६ ॥

**तत्र गुण्यगुणकयोर्घातो वा गुणकगुण्ययोर्घातस्तुल्यो भवति ।**

यथा **अब**गुणनफलं **ज**संज्ञं कल्पितम् । पुनर्**बअ**गुणनफलं **दं** कल्पितम् । जं दं च मिथस्तुल्यमस्ति ।

---

१ एकाङ्क° K. २ एकं K.

अस्योपपत्तिः ।

रूपं[1] बं निःशेषं तथा करोति यथा अं जं निःशेषयति । यतः अं बगुणितं जं कल्पितम् ।

अ ..
ब ...
ज ......
द .....

पुनरेकम् अं तथा निःशेषं करोति यथा बं दं निःशेषयति । यतो बं अगुणितं दं कल्पितम् । यदि व्यत्यासः क्रियते तदैकं बं तथा निः- शेषं करिष्यति यथा अं दं निःशेषं करोति । एकं बं निःशेषमकरोत् यथा अं जं निःशेषमकरोत् । तस्माद् अं यावद्वारं जं निःशेषं करोति तावद्वारमेव दं निःशेषं करिष्यति । तस्माद् जं दं तुल्यं जातम् । इद- मेवास्माकमिष्टम् ॥

## अथ सप्तदशं क्षेत्रम् ॥ १७ ॥

**यत्राङ्कद्वयं तृतीयाङ्केन गुण्यते तयोर्घातयोर्निष्पत्तिस्तद- ङ्कद्वयनिष्पत्तिर्भविष्यति ।**

यथा बं अगुणितं दघातः कल्पितः । पुनर्जं अगुणितं हघातः कल्पितः । दहनिष्पत्तिर्बजनिष्पत्तितुल्या जाता ।

अस्योपपत्तिः ।

एकम् अं तावद्वारं निःशेषं करोति यावद्वारं बं दं निःशेषं करोति । एवं हि एकम् अं तावद्वारं निःशेषं करोति यावद्वारं जं हं निःशेषं करोति । तस्माद् बं दं तावद्वारं निः- शेषं करिष्यति यावद्वारं जं हं निःशेषं करोति । तस्माद् बदनिष्पत्तिर्जहनिष्पत्तितुल्या भविष्यति । यदि व्यत्यासः क्रियते तदा बजनिष्पत्तिर्दहनिष्पत्ति- समाना भविष्यति । इदमेवास्माकमिष्टम् ॥

अ ..
ब ...
ज .... .
द ... ...
ह ... ... . .

## अथाष्टादशं क्षेत्रम् ॥ १८ ॥

**योऽङ्कः अङ्कद्वयेन पृथक् गुण्यते तदा तयोर्द्वयोरङ्कयोर्नि- ष्पत्तिस्तद्द्वयनिष्पत्तिसमाना भविष्यति ।**

---

१ एकं K.

यथा जं अगुणितं घातो दं कल्पितः । पुनर्जं बेन गुणितं घातश्च हं कल्पितः । तस्माद् अबनिष्पत्तिर्दहनिष्पत्तितुल्या भविष्यति ।

अ ...
ब ....
ज ..
द ... ...
ह ... ... ..

अस्योपपत्तिः ।

यतो जम् अगुणितं दं जातम् । अं जगुणितं तदापि दं भविष्यति । एवं हि जं बगुणितं हं जातम् । बं जगुणितं तदापि हं भविष्यति । तस्मात् दहनिष्पत्तिः अबनिष्पत्तितुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

अथैकोनविंशतितमं[1] क्षेत्रम् ॥ १९ ॥

**यत्र तथा चत्वारोऽङ्का भवन्ति येषु प्रथमद्वितीययोर्निष्पत्तिस्तृतीयचतुर्थयोर्निष्पत्तिसमाना भवति । तदा प्रथमचतुर्थघातो द्वितीयतृतीयघाततुल्यो भविष्यति । यदि चत्वारोऽङ्का भवन्ति तत्र प्रथमचतुर्थयोर्घातो द्वितीयतृतीयघाततुल्यश्चेद्भवति तदा प्रथमद्वितीयनिष्पत्तिस्तृतीयचतुर्थनिष्पत्तिसमाना भविष्यति ।**

यथा अबजदचत्वारोऽङ्काः सन्ति तत्र अबनिष्पत्तिर्जदनिष्पत्तितुल्यास्ति । तस्माद् अदघातो बजघातसमानो भविष्यति ।

अस्योपपत्तिः ।

अम् दगुणितं घातश्च हं कल्पितः । बं जेन गुणितं घातो झं कल्पितः । पुनर् अजघातश्च वं कल्पितः । तस्माद् अं जदाभ्यां गुणितं घातः वं हं जातः । तस्मात् जदनिष्पत्तिर्वहनिष्पत्त्या तुल्या भविष्यति । पुनर् अं बं जगुणितं वं झं घातः कल्पितः । तस्माद् अबनिष्पत्तिर्वझनिष्पत्तिसमाना भविष्यति । अबनिष्पत्तिर्जदनिष्पत्ति-

अ ... ...
ब ... .
ज ...
द ..
ह ... ... ... ...
झ ... ... ... ...
व ..................

---

[1] अथोनविं° K.

समानास्ति । जदनिष्पत्तिश्च वहनिष्पत्तिसमानास्ति । तस्मात् वहनि-ष्पत्तिर्वझनिष्पत्तिसमाना भविष्यति । तस्मात् वनिष्पत्तिर्हेन झेन तुल्या जाता । तस्मात् हझे समाने जाते ।

पुनरपि हं झं समानं कल्पितम् । तस्मात् अबनिष्पत्तिर्जदनि-ष्पत्तितुल्या भविष्यति ।

अस्योपपत्तिः ।

पूर्वप्रकारेण वझनिष्पत्तिः अबनिष्पत्तिसमानास्ति । वहनिष्पत्ति-र्जदनिष्पत्तिसमानास्ति । वहनिष्पत्तिर्वझनिष्पत्तिर्मिथस्तुल्यास्ति । कुतः । हझयोस्तुल्यत्वात् । अतः अबजदनिष्पत्तिर्मिथः समाना भवि-ष्यति । इदमेवास्माकमिष्टम् ॥

अनेन क्षेत्रेणेदमपि सिद्धम् ।

यदि तादृशास्त्रयोऽङ्का भवन्ति येषु प्रथमद्वितीययोर्निष्पत्तिर्द्वितीय-तृतीययोर्निष्पत्तिसमाना भवति तत्र प्रथमतृतीयघातो द्वितीयवर्गतुल्यो भवति । इदमपि ज्ञातम् । प्रथमतृतीयघातो यदि द्वितीयवर्गतुल्यो भवति तदा प्रथमद्वितीयनिष्पत्तिर्द्वितीयतृतीयनिष्पत्तितुल्या भवति ॥

## अथ विंशतितमं क्षेत्रम् ॥ २० ॥

**यत्र लघ्वङ्का एकनिष्पत्तौ तथा भवन्ति यथैतेभ्यो लघ्वङ्कास्तन्निष्पत्तौ न भवन्ति तदैतेऽङ्कास्तस्यामेव निष्पत्तौ ये बृहदङ्कास्तान् निःशेषान् करिष्यन्ति । यथाक्रमं लघ्वङ्केषु लघ्वङ्कास्ते महदङ्केषु लघ्वङ्कान्निःशेषान् करिष्यन्ति । लघ्व-ङ्केषु ये महदङ्कास्ते महदङ्केषु महदङ्कान्निःशेषान् करिष्यन्ति ।**

यथा अबजदे एकनिष्पत्तौ कल्पिते । हझं वतं तस्यामेव नि-ष्पत्तौ लघ्वङ्कौ कल्पितौ । तस्मात् हझं अबं यावद्वारं निःशेषं करि-ष्यति वतं जदं तावद्वारमेव निःशेषं करिष्यति ।

अस्योपपत्तिः ।

हझम् अबस्यांशोऽस्ति वा यावद्गुणितोंऽशोऽस्ति । यदि यावद्गुणितोंऽशो भवति तदा हझस्य कचिह्नोपरि हककझौ अबांशतुल्यौ कल्पितौ । तदैते[1] एवांशा जदस्य भविष्यन्ति । तौ च बललतौ कल्पितौ । हकं बलस्य तत्प्रमाणं भविष्यति यत्प्रमाणं हझं वतस्य भवति । तस्मात् हकबलौ हझवतयोर्न्यूनौ भविष्यतः । हझवतयोर्निष्पत्तितुल्यौ भविष्यतः । हझवतौ अस्यामेव निष्पत्तौ न्यूनाङ्कौ कल्पितौ । इदमशुद्धम् । तस्मात् हझम् अबस्यांशो भविष्यति । तदा वतं जदस्यांशो भवति । न यावद्गुणितोंऽशः । तस्मात् हझं यावद्वारम् अबं निःशेषं करिष्यति तावद्वारं वतं जदं निःशेषं करिष्यति । इदमेवास्माकमिष्टम् ॥

अ ब ........
ज द ......
ह .. क .. झ
व .. ल . त

## अथैकविंशतितमं क्षेत्रम् ॥ २१ ॥

**ये लघ्वङ्कास्तथैकनिष्पत्तौ यदि भवन्ति यथान्ये तेभ्यो लघ्वङ्कास्तन्निष्पत्तौ न भवन्ति । तदा तेऽङ्का भिन्ना भवन्ति ।**

यथा अबौ लघ्वङ्कौ एकस्यां निष्पत्तौ कल्पितौ । एतौ भिन्नौ भविष्यतः ।

अस्योपपत्तिः ।

यदि भिन्नौ न स्तस्तदोभयोर्जं अपवर्तनं कल्पितम् । जं यावद्वारम् अं निःशेषं करोति तत्फलं हं कल्पितम् । पुनर् जं बं यावद्वारं निःशेषं करोति तत्फलं दं कल्पितम् । तस्मात् जं हदाभ्यां गुण्यते तदाऽनयोर्घातः अं बं भविष्यति । तस्मात् हदनिष्पत्तिः अबनिष्पत्तितुल्या भविष्यति । एतद्द्वयं हं दम् अबयोर्न्यूनमस्ति । इदमशुद्धम् । असदिष्टमेव समीचीनम् ॥

अ ...
ब ..
ज —
ह —
द —

---

1 तदा वते त एवां° K.

### अथ द्वाविंशतितमं क्षेत्रम् ॥ २२ ॥

**भिन्नाङ्कावल्पौस्तस्तन्निष्पत्तावन्यावल्पावङ्कौ न भविष्यतः।**

यथा अबौ द्वौ भिन्नाङ्कावल्पौ कल्पितौ । एतन्निष्पत्तावन्यावङ्कावल्पौ न भविष्यतः । यदि अन्यावङ्कौ एतन्निष्पत्तावल्पौ स्यातां तदा जदौ कल्पितौ । तस्मात् जं अं हतुल्यं निःशेषं करिष्यति । दं बं हतुल्यं निःशेषं करिष्यति । हं अं जतुल्यं निःशेषं करिष्यति । हं बं दतुल्यं निःशेषं करिष्यति । तस्मात् अबौ मिलिताङ्कौ जातौ । पूर्वं कल्पितौ तु भिन्नाङ्कौ । इदं बाधितम् । अस्मदिष्टमेव समीचीनम् ॥

अ ......
ब ....
ज ——
द ——
ह ——

### अथ त्रयोविंशतितमं क्षेत्रम् ॥ २३ ॥

**द्वयोर्भिन्नाङ्कयोरेकमङ्कमन्यस्तृतीयोऽङ्को निःशेषं करोति चेत्तदा तृतीयोऽङ्को द्वितीयाङ्केन साकं भिन्नो भविष्यति।**

यथा अबौ द्वौ भिन्नाङ्कौ कल्पितौ । जं तृतीयाङ्को यथा अं निःशेषं करिष्यति तथा कल्पितः । तदा जबाङ्कौ[1] भिन्नौ भविष्यतः ।

अ ......
ब .....
ज ...
द —

अस्योपपत्तिः ।

यदि जबाङ्कौ भिन्नौ न भविष्यतः तदोभयोरपवर्तनार्थं दं कल्पितः । तस्मात् दं जं निःशेषं करिष्यति । जं अं निःशेषं करोति । तस्मात् दं अं निःशेषं करिष्यति । दं बमपि निःशेषं करोति। तस्मात् अबौ मिलिताङ्कौ जातौ । कल्पितौ भिन्नाङ्कौ । इत्यशुद्धम् । तस्मादस्मदिष्टं समीचीनम् ॥

### अथ चतुर्विंशतितमं क्षेत्रम् ॥ २४ ॥

**यौ द्वावङ्कौ तृतीयाङ्काद्भिन्नौ स्तस्तयोर्घातोऽपि तस्मात्तृतीयाङ्काद्भिन्नो भवति ।**

---

[1] जं बाङ्काद्भिन्नो भविष्यति K.

यथा अबौ जाङ्काद्भिन्नौ कल्पितौ। अबयोर्घातो दं कल्पितः। तस्मा-
दयं दाङ्को जाद्भिन्नो भविष्यति।

अस्योपपत्तिः।

यदि दजावङ्कौ भिन्नौ न भवतस्तदा द्वयोरपवर्तनाङ्को हं कल्पितः।
हाङ्को दाङ्कं झतुल्यं निःशेषं करिष्यतीति कल्पितः॥
तस्मात् हझघातो दं भविष्यति। अं बेन गुणितं दं
जातमस्ति। तस्मात् हअनिष्पत्तिर्बझनिष्पत्तितुल्या
भविष्यति। हं जंनिःशेषं करोति। तस्मात् हं अं
भिन्नाङ्कौ भविष्यतः। तस्मात् हं अं लघू जातौ। अस्यां
निष्पत्तावन्यौ लघ्वङ्कौ न भवतः। एतावङ्कौ बझौ निःशेषौ करि-
ष्यतः। तस्मात् हं बं निःशेषं करिष्यति। जं निःशेषं करोति। तस्मात्
बजौ मिलिताङ्कौ जातौ। कल्पितौ च भिन्नाङ्कौ। इदमशुद्धम्॥ तस्मा-
दस्मदिष्टं समीचीनम्॥

अ ..
ब...
ज.....
द......
ह—
झ–

### अथ पञ्चविंशतितमं क्षेत्रम्॥ २५॥

**यद्येकाङ्को द्वितीयाङ्काद्भिन्नो भवति तदा तस्य वर्गोऽपि द्वितीयाङ्काद्भिन्नो भविष्यति।**

यथा अं बाद्भिन्नं कल्पितम्। जम् अअङ्कस्य वर्गः कल्पितः।
तस्मात् जं बाद्भिन्नं भविष्यति।

अस्योपपत्तिः।

दअङ्कअअङ्कौ तुल्यौ कल्पितौ। तस्मात् अं दं च
बाद्भिन्नं भविष्यति। अअङ्कदअङ्कयोर्घाततुल्यं जमस्ति।
तस्मात् जाङ्कोऽपि बाद्भिन्नो भविष्यति। इदमेवास्माक-
मिष्टम्॥

अ ..द..
ब...
ज....

### अथ षड्विंशतितमं क्षेत्रम्॥ २६॥

**यदि द्वावङ्कावन्याभ्यामङ्काभ्यां प्रत्येकं भिन्नौ भवत-स्तदाऽऽद्याङ्कद्वयघातोऽन्यद्वयाङ्कघाताद्भिन्नो भवति।**

यथा अं बमङ्कद्वयं कल्पितं तथा जद्मन्याङ्कद्वयं कल्पितम् । प्रत्येकं अं बं जदाभ्यां भिन्नमस्ति । अबयोर्घातो हं कल्पितः । जदयोर्घातो झं कल्पितः । तस्मात् हझावपि मिथो भिन्नौ भविष्यतः ।

अ... ब.....
ह... ... ... ... ...
ज.. द....
झ.... ...

अस्योपपत्तिः ।

यतः अं बं प्रत्येकं जाद्भिन्नमस्ति । तस्मात् हमपि जाद्भिन्नं भविष्यति । पुनर् अं बं प्रत्येकं दाद्भिन्नमस्ति । तस्मात् हमपि दाद्भिन्नं भविष्यति । तस्मात् जं दं प्रत्येकं हाद्भिन्नं भविष्यति । तस्मात् झमपि हाद्भिन्नं भविष्यति । इदमस्माकमिष्टम् ॥

## अथ सप्तविंशतितमं क्षेत्रम् ॥ २७ ॥

**यावङ्कौ भिन्नौ भवतस्तयोर्वर्गावपि भिन्नौ भविष्यतः । एवं तयोर्घनावपि भिन्नौ भवतः ।**

यथा अबौ भिन्नाङ्कौ कल्पितौ । अनयोर्वर्गौ जदौ कल्पितौ । हझौ च घनौ कल्पितौ । तस्मादनयोर्वर्गौ जदौ मिथो भिन्नौ भविष्यतः । हझौ घनावपि मिथो भिन्नौ भविष्यतः ।

अस्योपपत्तिः ।

अबौ मिथो भिन्नौ स्तः । तस्मात् प्रत्येकस्य वर्गोऽपि द्वितीयाद्भिन्नो भविष्यति । तस्मात् अं दाद्भिन्नं भविष्यति । अवर्गो जं दाद्भिन्नं भविष्यति । प्रत्येकम् अं जं बदाभ्यां भिन्नमस्ति । तस्मात् अजघातो हमस्ति बदघातो झमस्ति हझावपि मिथो भिन्नौ भविष्यतः । इदमेवास्माकमिष्टम्[1] ॥

अ ..
ब...
ज....
द.........
ह........
झ...........................

[1] इदमेवा° K.

## अथाष्टाविंशतितमं क्षेत्रम् ॥ २८ ॥

**यावङ्कौ भिन्नौ भवतस्तयोर्योगोऽपि प्रत्येकाङ्किन्नो भविष्यति । यदि योगः प्रत्येकाङ्किन्नो भविष्यति तदा तदङ्कयोगयोरन्तरमपि भिन्नं भविष्यति ।**

यथा **अबबजौ** भिन्नाङ्कौ कल्पितौ । तस्मात् **अजम् अबाद्भिन्नं** भविष्यति ।

अ.....ब....ज
द—

अस्योपपत्तिः ।

यदि अजम् अबाद्भिन्नं न भवति तदोभयोरपवर्तनं **दं** कल्पितम् । एतत् **दं बजस्याप्यपवर्तनं** करिष्यति । तस्मात् **अबबजौ** अभिन्नौ भवतः । इदमशुद्धम् ॥

अनेनैव प्रकारेण **अजं बजाद्भिन्नं** भविष्यति ।

पुनरपि **अजअबौ** भिन्नौ कल्पितौ तस्मात् **अबबजावपि** भिन्नौ भविष्यतः ।

अस्योपपत्तिः ।

यदि **अबबजौ** भिन्नौ न भवतस्तदोभयोरपवर्तनं दं कल्पितम् । तदा दम् अजस्याप्यपवर्तनं करिष्यति । तस्मात् **अजअबौ** मिलितौ भविष्यतः । इदमशुद्धम् । अस्मदिष्टमेव समीचीनम् ॥

### पुनः प्रकारान्तरम् ॥

यदि **अबबजौ** मिलितौ कल्पितौ तदा **अजबजावपि** मिलिताङ्कौ भविष्यतः । यदि **अजबजौ** मिलिताङ्कौ न भवतस्तदानयो रूपं विना कोऽप्यपवर्तको न भविष्यति ।

अ......ब....ज

**अबमपि** रूपं विना न कोऽप्यपवर्तयति । तस्माद् **अबबजौ** भिन्नौ भविष्यतः । इदमशुद्धम् ॥

पुनरपि अजबजौ मिलितौ कल्पितौ अबबजावपि मिलितौ भविष्यतः। यदि मिलितौ न स्तस्तदाऽनयो रूपं विनाऽपवर्तको न भविष्यतीति। अजमपि रूपं विना न कोऽप्यपवर्तयतीति। इदमशुद्धम्। इष्टमुपपन्नम् ॥

## अथैकोनत्रिंशत्तमं क्षेत्रम् ॥ २९ ॥

**योगाङ्कं प्रथमाङ्को निःशेषं करोति।**

यथा अं योगाङ्कः कल्पितः। बम् अस्यापवर्तकं कल्पितम्। यदि बं प्रथमाङ्को भवति तदेष्टमस्माकं समीचीनम्। यदि बं प्रथमाङ्को न भवति तदा बस्यापवर्तकं जं कल्पितम्। अनेनैव प्रकारेण जं प्रथमाङ्को भविष्यति। यद्ययं न स्यात्तदाऽन्यः कल्पनीयः। एवं कोऽप्यस्यापवर्तनाङ्को भविष्यति। तदेव[1] जं कल्पितम्। तस्मात् जम् अमपि निःशेषं करिष्यति। इदमेवेष्टम् ॥

अ....
ब..
ज—

## अथ त्रिंशत्तमं क्षेत्रम् ॥ ३० ॥

**योऽङ्कः कश्चित् स प्रथमाङ्को भवति। अथवा तस्यापवर्तकः प्रथमाङ्को भवति।**

यथा अं कल्पितम्। यदीदं प्रथमाङ्कः स्यात्तदैवमिष्टं जातम्। यदि प्रथमाङ्को न भवति तदा योगाङ्को भविष्यति। योगाङ्कं प्रथमाङ्कः निःशेषं करिष्यत्येव। इदमेवास्माकमिष्टम् ॥

अ...

## अथैकत्रिंशत्तमं क्षेत्रम् ॥ ३१ ॥

**यमङ्कं प्रथमाङ्को निःशेषं न करोति तस्मात् प्रथमाङ्को भिन्नो भवति।**

यथा अं प्रथमाङ्कः कल्पितः। यमङ्कं प्रथमाङ्को निःशेषं न करोति सोऽङ्को बं कल्पितः। तस्मात् अं बाद्भिन्नं भविष्यति।

अ...
ब.....

---

[1] तदैवं D.

अस्योपपत्तिः ।

यदि द्वावपि भिन्नौ न स्तस्तदैतयो रूपं विहायान्यः कश्चिदङ्कोऽपवर्तनं करिष्यति । अं च प्रथमाङ्कः कल्पितः । इदमशुद्धम् ॥

## अथ द्वात्रिंशत्तमं क्षेत्रम् ॥ ३२ ॥

**प्रथमाङ्को यदि घाताङ्कं निःशेषं करोति तदा प्रथमाङ्कस्तस्य घातस्यैकभुजमपि निःशेषं करिष्यति ।**

यथा अं प्रथमाङ्कः कल्पितः । बं घातफलाङ्कः कल्पितः । घातफलाङ्कस्य जदौ भुजौ कल्पितौ । अं बं निःशेषं करोतीति कल्पितम् । तस्मात् अं जं निःशेषं करिष्यति वा दं निःशेषं करिष्यति ।

अस्योपपत्तिः ।

यदि अं जं निःशेषं करोति तदास्मदिष्टं समीचीनम् । यदि निःशेषं न करोति तदा अजौ मिथो भिन्नौ भविष्यतः । पुनर् अं बं हतुल्यं निःशेषं करोतीति कल्पितम् । तस्मात् अं चेत् हेन गुण्यते तदा बं भविष्यति । जदघातोऽपि बं भविष्यति । तस्मात् अजनिष्पत्तिर्दहनिष्पत्त्या तुल्या भविष्यति । अजौ तथा न्यूनाङ्कौ स्तो यथाऽस्यां निष्पत्तावन्यौ न्यूनाङ्कौ न भविष्यतः । तस्मात् अं दं निःशेषं करिष्यति । इदमेवास्माकमिष्टम् ।

अ...
ब............
ज..
द......
ह....

## अथ त्रयस्त्रिंशत्तमं क्षेत्रम् ॥ ३३ ॥

**ज्ञाताङ्कनिष्पत्तौ लघ्वङ्कानामुत्पादनं चिकीर्षितमस्ति ।**

यथा अबजम् अङ्काः कल्पिताः । एतेऽङ्का यदि मिथो भिन्नाः सन्ति तदास्यां निष्पत्तावेत एवाङ्का लघवो भविष्यन्ति । यदि मिलिताङ्काः स्युस्तदैतेषामपवर्त्तको महदङ्को दं कल्पितः । पुनरिदं कल्पनीयं दं अं हतुल्यं निःशेषं करोति बं झतुल्यं निःशेषं करोति जं च वतुल्यं निःशेषं करोति । तस्मात् हं झं वम् एतेऽङ्कास्तस्यां निष्पत्तौ लघ्वङ्का भविष्यन्ति ।

यदि न भवन्ति तदा तकलं तस्यां निष्पत्तौ लघ्वङ्का भविष्यन्ति । तः अं कः बं लं जं मतुल्यं निःशेषं करोतीति कल्पितम् । तस्मात् मतघातः अं भविष्यति । दहघातः अमस्ति । तस्मात् हतनिष्पत्तिर्मदनिष्पत्तिसमाना भविष्यति । हं च तादधिकमस्ति । तस्मात् मं दादधिकं भविष्यति । अबजं निःशेषं करिष्यति । पूर्वमेतेषां निःशेषको बृहदङ्को दं कल्पितः । इदमशुद्धम् । तस्मात् हं झं वं विनाऽन्ये लघ्वङ्का अस्यां निष्पत्तौ न भविष्यन्ति । इदमेवास्माकमिष्टम् ॥

अ......
ब........
ज..........
ह... द..
झ....
व.....
त—
क——
ल———
म—

## अथ चतुस्त्रिंशत्तमं क्षेत्रम् ॥ ३४ ॥

**तत्र द्वाभ्यामङ्काभ्यां यो लघ्वङ्को निःशेषको[1] भवति तदुत्पादनं चिकीर्षितमस्ति ।**

यथा अं बम् अङ्कद्वयं कल्पितम् । यद्येतयोर्मध्ये लघ्वङ्को महदङ्कं निःशेषं करोति तदा महदङ्क एवेष्टः । यदि न करोत्युभौ[2] च मिथो भिन्नौ भवतस्तदा अं बगुणितं कार्यम् । तदा घातफलं जमिष्टं भविष्यति ।

अस्योपपत्तिः ।

जं अं बं प्रत्येकं निःशेषं करोतीति प्रकटमेवास्ति । यद्यन्यो लघ्वङ्को भवति तद् दं कल्पितम् । अबौ हतुल्यं झतुल्यमेनं निःशेषं करिष्यतः । तस्मात् अहघातो दं भविष्यति । तथा बझघातोऽपि दं भविष्यति । तस्मात् अबनिष्पत्तिर्झहनिष्पत्तिसमाना भविष्यति । अबौ तथा लघ्वङ्कौ स्तो यथाऽस्यां निष्पत्तावन्यौ लघ्वङ्कौ न भविष्यतः । तस्मात् अं झं निःशेषं करिष्यति । बं हं निःशेषं करिष्यति । पुनर्बम् अझाभ्यां गुणितं जं दं जातम् । तस्मात् अझनि-

अ...
ब....
ज............
द————
ह——
झ————

---

१ निःशेषो K. २ D. inserts तदा.

ष्पत्तिर्जदनिष्पत्तितुल्या भविष्यति । तस्मात् जं महदङ्को दं लघ्वङ्कमपि निःशेषं करिष्यति । इदमशुद्धम् । तस्मात् जात् कोऽपि लघ्वङ्को न भविष्यति यं अबौ निःशेषं कुरुतः ।

यदि अबौ मिलिताङ्कौ स्तस्तस्मात् झहौ तस्यां निष्पत्तौ लघ्वङ्कौ कल्पितौ । तस्मात् अबनिष्पत्तिर्झहनिष्पत्तितुल्या भविष्यति । अह-घातफलमथवा बझघातफलं च जं कल्पितम् । इदमेवास्माकमिष्टम् ।

अबौ जं निःशेषं कुरुत इति प्रकटमेवास्ति । अयं लघ्वङ्कः कुतोऽस्ति । यद्ययं लघ्वङ्को न भवति तदाऽस्मात् लघ्वङ्को दं कल्पितः । अमुम् अं वतुल्यं निःशेषं करोति बं च ततुल्यं निःशेषं करोति । तस्मात् अवघातो दं भविष्यति । बतघातोऽपि दं भविष्यति । तस्मात् अबनिष्पत्तिः तवनिष्पत्तिसमाना भविष्यति । झहनिष्पत्तिसमाना आसीत् । तस्मात् झहनिष्पत्तिः तवनिष्पत्तिसमाना भविष्यति । अस्यां निष्पत्तौ झहौ लघ्वङ्कौ स्तः ।

अ....
ब......
झ..
ह...
ज............
द————
व—त—

तस्मात् झं तं निःशेषं करिष्यति । पुनर्बं झेन गुणितं जं जातं तेन गुणितं दं जातम् । झतनिष्पत्तिर्जदनिष्पत्तितुल्या भविष्यति । तस्मात् जं महदङ्को दं लघ्वङ्कं निःशेषं करिष्यति । इदमशुद्धम् । अस्मदिष्टमेव समीचीनम् ॥

## अथ पञ्चत्रिंशत्तमं क्षेत्रम् ॥ ३५ ॥

**यं लघ्वङ्कमन्यौ कावप्यङ्कौ निःशेषं कुरुतः सोऽङ्कस्ताभ्यामङ्काभ्यां निःशेषितमन्याङ्कं[1] निःशेषं करिष्यति ।**

यथा वतं लघ्वङ्कः कल्पितः । अमुं अबजदाङ्कौ निःशेषं कुरुतः । पुनरेतावङ्कौ हझाङ्कं निःशेषं कुरुतः । तस्मात् वताङ्कोऽपि हझं निःशेषं करिष्यति ।

---

१ K. omits अन्य in अन्याङ्कं.

अस्योपपत्तिः ।

यदि **वताङ्को हझं** निःशेषं न करोति तस्मिन् **कझमवशिष्टं** कल्पितम्। **कझं वतान्न्यूनमवशिष्टम्**। पुनर् **अबजदौ हकं** निःशेषं कुरुतः ।

कुतः । वतनिःशेषकरणात् । **वतेन हकस्यापि** निःशेषकरणाच्च । पुनर् **अबजदौ हझं** निःशेषं कुरुतः । तस्मात् **कझमपि** निःशेषं करिष्यतः । **वतं** लघ्वङ्कम् **अबजदौ** निःशेषं चक्रतुः । **वतं कझा**-दधिकमस्ति । इदमशुद्धम् । अस्मदिष्टमेव समीचीनम् ॥

अ . . ब
ज . . . द
व . . . . . . त
ह . . . . . . . . . . . . क . . झ

## अथ षट्त्रिंशत्तमं क्षेत्रम् ॥ ३६ ॥

**तादृशो लघ्वङ्कः कल्पनीयो यं द्वाभ्यामधिका अङ्का निःशेषं कुर्वन्ति ।**

यथा **अबजास्त्रयोऽङ्काः** कल्पिताः। लघ्वङ्कस्तु **दं** कल्पितः । अमुम् **अबौ** निःशेषं कुरुतः । यदि **जाङ्कोऽपि दं** निःशेषं करोति तदायमेव लघ्वङ्कः सिद्धस्त्रिभिरङ्कैरपि निःशेषो भवति ।

अत्रोपपत्तिः प्रकटैव। यदि **दाङ्को** लघुर्न भवति तस्मादन्यो लघ्वङ्को **हः** कल्पितः। अमुम् **अबौ** निःशेषं करिष्यतः। तस्मात् **हं दाङ्कोऽपि** निःशेषं करिष्यति । **दं हाङ्का**दधिकमस्ति । इदमशुद्धम् ।

अ . . .
ब . . . .
ज . . . . . .
द . . . . . . . . . . . .
ह ————————

यदि **जाङ्को दं** निःशेषं न करोति तदा पुनर्लघ्वङ्को निष्पादनीयो यं **जदौ** निःशेषं कुरुतः । सोऽङ्कः **हं** कल्पितः। अयं लघ्वङ्को जातः । एनम् **अबजदा** निःशेषं कुर्वन्ति ।

अस्योपपत्तिः ।

यस्मात् **अबौ दं** निःशेषं कुरुतो **दाङ्को हं** निःशेषं करोति। तस्मात्

अबौ हमपि निःशेषं करिष्यतः । जाङ्कोऽपि हं निःशेषं करिष्यति । तस्मात् हाङ्कोऽपि अबजैर्निःशेषो भवति । अयं हाङ्कः कुतो लघुस्तत्र युक्तिः । यद्ययं लघुर्न भवति तदा झाङ्को लघुः कल्पितः । एनम् अबजा निःशेषं कुर्वन्ति तस्मात् अबावपि निःशेषं कुरुतः । दाङ्कोऽपि निःशेषं करिष्यति । जाङ्कोऽपि निःशेषं करोति । तस्मात् जदावपि निःशेषं करिष्यतः । तस्मात् हाङ्कोऽपि निःशेषं करिष्यति । हाङ्को झादधिकः । इदमशुद्धम् । तस्मादिष्टमस्माकं समीचीनम् ॥

अ..
ब...
ज....
द......
ह............
झ————

## अथ सप्तत्रिंशत्तमं क्षेत्रम् ॥ ३७ ॥

**यमङ्कं यः कश्चनाङ्कः निःशेषं करोति तत्र लब्धिस्तन्नामकांशो भवति ।**

यथा अं बाङ्को निःशेषं करोति । यावद्वारं बाङ्को अं निःशेषं करोति तावद्वारं रूपं जाङ्कं निःशेषं करोतीति कल्पितम् । तस्मात् यावद्वारं जम् अं निःशेषं करोति तावद्वारं रूपं बाङ्कं निःशेषं करिष्यति । तस्माद्रूपं बस्य सोंऽशो भविष्यति योंऽशो जम् अअङ्कस्यास्ति । रूपं बस्य बाङ्कनामकोंऽशो जातः । तदा जम् अअङ्कस्य सोंऽशो जातः । इदमेवास्माकमिष्टम्[2] ॥

अ............
ब ...
ज ....
·

## अथाष्टत्रिंशत्तमं क्षेत्रम् ॥ ३८ ॥

**यस्याङ्कस्यांशो यन्नामको भवति तन्नामाङ्कस्तमङ्कं निःशेषं करिष्यति ।**

यथा अअङ्कस्य बमंशोऽस्ति । रूपं जस्य स एवांशोऽस्तीति कल्पितम् । तस्मात् बं जनामकं भविष्यति । रूपं जाङ्कं तथा निःशेषं करोति यथा

अ...........
ब ..
ज ......
·

---

१ भविष्यति K. २ °वास्मदिष्टम् K.

बाङ्कः अं निःशेषं करोति । तस्माद्रूपं बं निःशेषं तथा करोति यथा जाङ्कः अं निःशेषं करोति । तस्मात् जाङ्कः बअंशनामकः अं निःशेषं करिष्यति । इदमेवास्माकमिष्टम् ॥

### अथोनचत्वारिंशत्तमं क्षेत्रम् ॥ ३९ ॥

**तत्र यस्य बहवोंऽशाः प्राप्यन्ते तादृशो लघ्वङ्को निष्पादनीयोऽस्ति ।**

यथा अबजा अंशाः कल्पिताः । दहझनामका अङ्काः कल्पिताः ।

तस्मात्तादृशो लघ्वङ्कः कल्पनीयो यं दहझा निःशेषं करिष्यन्ति । असावङ्को वं कल्पितः । तस्मात् अयं स लघ्वङ्कोऽस्ति यस्य ते कल्पितांशा लभ्यन्ते ।

अ, $\frac{1}{2}$ द..
ब, $\frac{1}{3}$ ह...
ज, $\frac{1}{4}$ झ....
व............
त----------

अस्योपपत्तिः ।

यद्ययं लघ्वङ्को न भवति तदा तो लघ्वङ्कः कल्पितः । कल्पिता अंशाः तलघ्वङ्कस्य भविष्यन्ति । एतलघ्वङ्कनामसदृशा अङ्का हदझा एनं निःशेषं करिष्यन्ति । लघ्वङ्को वात् लघुरस्ति । इदमनुपपन्नम् । तस्मात् व एवेष्टाङ्कः । इदमेवाऽस्माकमिष्टम् ॥ ३९ ॥

श्रीमद्राजाधिराजप्रभुवरजयसिंहस्य तुष्ट्यै द्विजेन्द्रः
श्रीमत्सम्राड् जगन्नाथ इति समभिधारूढितेन प्रणीते ।
ग्रन्थेऽस्मिन्नाम्नि रेखागणित इति सुकोणावबोधप्रदात-
र्यध्यायोऽध्येतृमोहापह इह विरतिं सप्तमः संगतोऽभूत् ॥ ७ ॥

इति श्रीजगन्नाथसम्राड्विरचिते रेखागणिते
सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

## अथाष्टमोऽध्यायः प्रारभ्यते ॥ ८ ॥

॥ तत्र पञ्चविंशतिक्षेत्राणि सन्ति ॥

### अथ प्रथमं क्षेत्रम् ॥ १ ॥

**यावन्तोऽङ्का एकनिष्पत्तौ भवन्ति तेषामाद्यन्तौ भिन्नाङ्कौ चेद्भवतस्तदा तस्यां निष्पत्तौ तान् विनाऽन्ये लघ्वङ्का न भविष्यन्ति ।**

यथा एकस्यां निष्पत्तौ **अवजदा** लघ्वङ्काः कल्पिताः । **अदौ** मिथो भिन्नौ कल्पितौ । तस्मादस्यां निष्पत्तावेते लघ्वङ्काः सन्ति ।

अस्योपपत्तिः ।

यद्येते लघ्वङ्का अस्यां निष्पत्तौ न भवन्ति तदा तस्यां निष्पत्तौ तेभ्यो लघवोऽन्येऽङ्का **हझवताः** कल्पिताः । तस्मात् अदनिष्पत्तिर्हतनिष्पत्तिसमाना भविष्यति । अदौ यौ भिन्नाङ्कौ तावस्यां निष्पत्तौ लघ्वङ्कौ भविष्यतः । यावन्तोऽङ्का अस्यां निष्पत्तौ भवन्ति तान् अदावेव निःशेषं करिष्यतः । तस्मात् अं हं निःशेषं करिष्यति । अं हादधिकमस्ति । इदमेवास्माकमिष्टम् ॥

अ,८.ब,१२.ज,१८.द,२७.
ह - - -
झ - - -　त - - -
व - - -

### अथ द्वितीयं क्षेत्रम् ॥ २ ॥

**एकनिष्पत्तौ ये लघ्वङ्का भवन्ति तेषामुत्पादनमिष्टमस्ति ।**

यथा अबनिष्पत्तौ चतुर्णां लघ्वङ्कानामुत्पादनमिष्टमस्ति । अस्यां निष्पत्तौ **अबौ** लघ्वङ्कौ कल्पितौ । अवर्गः कार्यः । पुनर् अबघातः कार्यः । पुनर्बवर्गः कार्यः । फलानां च जदहसंज्ञा कार्या । पुनरेतत्त्रयेण अं गुणनीयम् । बहघातश्च कार्यः । एतेषां फलानि **झवतकानि** कल्पितानि ।

अस्योपपत्तिः ।

अम् अबाभ्यां गुणितं फलं जं दमुत्पन्नम् । तदा अबनिष्पत्तिः

जदनिष्पत्त्या तुल्या भविष्यति। **बम्** **अबाभ्यां** गुणितं फलं **दहसंज्ञं** जातम्। तस्माद् **दहनि**ष्पत्तिः **अबनिष्पत्ति**तुल्या भविष्यति। तस्मादेतत्त्रयमेकनिष्पत्तौ भविष्यति। पुनर् **अम्** एतत्त्रयगुणितं **झवतं** निष्पन्नं तदप्येकनिष्पत्तौ जातम्। **ह**गुणितम् **अबं**[1] फलं **तकसंज्ञं** जातम्। इदमपि पूर्वनिष्पत्तौ जातम्। तस्माच्चत्वारोऽङ्का एकस्यामेव निष्पत्तौ जाताः। एते लघ्वङ्का ये अस्यां निष्पत्तौ जाताः। कुतः। **अबयो**र्भिन्नाङ्कत्वात्। **जहौ** एते[2]षां वर्गौ **झकौ** घनौ त्रयाणामङ्कानामाद्यन्तौ चतुर्णामप्याद्यन्तौ भिन्नौ भिन्नौ पतितौ। इदमेवास्माकमिष्टम्॥

अ, २. ब, ३.
ज, ४. द, ६. ह, ९.
झ, ८. व, १२. त, १८. क २७.

अनेन क्षेत्रेणेदं सिद्धम्। ये लघवस्त्रयोऽङ्का एकनिष्पत्तौ भवन्ति तेषामाद्यन्तौ वर्गौ भवतः। ये लघवश्चत्वारोऽङ्का एकनिष्पत्तौ भवन्ति तेषामाद्यन्तौ घनौ भवतः॥

## अथ तृतीयं क्षेत्रम्॥ ३॥

**यावन्तो लघ्वङ्का एकनिष्पत्तौ भवन्ति तेषामाद्यन्तौ भिन्नौ भवतः।**

यथा **अबजदा** लघ्वङ्काश्चत्वार एकनिष्पत्तौ कल्पिताः। तत्र **अदौ** भिन्नौ भ[3]वतः।

अस्योपपत्तिः।

अस्यां निष्पत्तौ **हझौ** लघ्वङ्कौ गृहीतौ। पुन**र्वतका**स्त्रयोऽङ्का लघवो गृहीताः। पुन**र्लमनसा**श्चत्वारो लघ्वङ्कास्तस्यामेव निष्पत्तौ गृहीताः। तस्मादेते **अबजद**तुल्या भविष्यन्ति। **लसौ** भिन्नौ स्तः। **अदा**वपि भिन्नौ भविष्यतः। इदमेवास्माकमिष्टम्॥

अ, ८. ब, १२. ज, १८. द, २७.
ह, २. झ, ३.
व, ४. त, ६. क, ९.
ल, ८. म, १२. न, १८. स, २७.

---

१ अं बं K. २ K. एते (एतौ? or एतयो.?) ३ भविष्यतः K.

## अथ चतुर्थक्षेत्रम् ॥ ४ ॥

**तत्र कल्पितबहुनिष्पत्तिषु लघूनामङ्कानामुत्पादनमिष्टमस्ति ।**

यथा **अब**निष्पत्ति**जद**निष्पत्ति**हझ**निष्पत्तयः कल्पिताः । प्रत्येकमङ्कद्वयमस्यां निष्पत्तौ लघ्वङ्कं भवति । अथ **तं** लघ्वङ्क उत्पाद्यः यं **बजौ** निःशेषं करिष्यतः । तथैकोऽङ्को **वम्** उत्पाद्यो यम् **अं** तथा निःशेषं करिष्यति यथा **बं तं** निःशेषं करोति । पुनर्दं **कं** तथा निःशेषं करोति यथा **जं तं** निःशेषं करोति । पुनर्लः लघ्वङ्क उत्पाद्यो यथा **लं कहौ** निःशेषं करिष्यतः । पुनर्नसौ लघ्वङ्कौ उत्पाद्यौ यौ **वतौ** तथा निःशेषं कुरुतो यथा **कं लं** निःशेषयति । **झं मं** निःशेषं तथा करोति यथा **हं लं** निःशेषयति । तस्मात् **नसलम**अङ्कास्तासु निष्पत्तिषु उत्पन्ना जाताः ।

अस्योपपत्तिः ।

**अबौ वतौ** क्रमेण तुल्यं निःशेषं कुरुतः । **वतौ नसौ** तुल्यं निःशेषं कुरुतः । तस्मात् **नसौ अब**निष्पत्तौ भविष्यतः । **जदौ तकौ** तुल्यं निःशेषं कुरुतः । पुनस्तकौ **सलौ** निःशेषं कुरुतः । तस्मात् **सलौ जद**निष्पत्तितुल्यौ जातौ । **हझौ लमौ** तुल्यं निःशेषं करिष्यतः । तस्मात् **लमौ हझ**निष्पत्तितुल्यौ भविष्यतः । तस्मात् **नसलमा** लघ्वङ्का अस्यां निष्पत्तौ जाताः । यदि लघ्वङ्का एते न भवन्ति तस्मात् **गफछखा** लघ्वङ्काः कल्पिताः । तस्मात् **अबौ गफौ** तुल्यनिष्पत्तौ भविष्यतः । पुनरबौ लघ्वङ्कौ अस्यां निष्पत्तौ स्तः । तस्मादेतौ **गफं** निःशेषं करिष्यतः । अनेनैव प्रकारेण **जदौ फछौ** निःशेषं कुरुतः । **हझौ छखौ** निःशेषं कुरुतः । तस्मात् **बजौ फं** निःशेषं करिष्यतः । **तं** लघ्वङ्कं **बजौ** निःशेषं करिष्यतः । तस्मात्तं **फं** निःशेषं करिष्यति । पुनस्तकनिष्पत्तिः **फछ**निष्पत्तितुल्या भविष्यति । तस्मात् **कं. छं**

अ, २. ब, ५. ज, ३. द, ४. ह, ५. झ, ६.
व, ६. त, १५. क, २०. ल, २०. म, २४.
न, ६. स, १५.
न, ६. स, १५. ल, २०. म, २४.
ग - - - फ - - - - छ - - - - - - ख - - - - - - - -

निःशेषं करिष्यति । हं छनिःशेषमासीत्[1] तस्मात् कहौ छं निःशेषं करिष्यतः । लः लघ्वङ्कोऽस्ति यं कहौ निःशेषं करिष्यतः । तस्मात् लं छं निःशेषं करिष्यति । छं च लघ्वङ्कोऽस्ति । इदमशुद्धम् । तस्मान्नसलमा एव लघ्वङ्का भविष्यन्ति । इदमेवेष्टम् ॥

## अथ पञ्चमं क्षेत्रम् ॥ ५ ॥

**घातफलाङ्कस्य घातफलाङ्केन निष्पत्तिस्तद्भुजनिष्पत्त्योर्घातो भविष्यति ।**

यथा अघातफलाङ्कस्य जदौ भुजौ कल्पितौ । बघातफलस्य हझौ भुजौ कल्पितौ । तस्मात् अबयोर्निष्पत्तिः जहदझनिष्पत्त्योर्घातो भविष्यति । अनयोर्निष्पत्त्योर्वतकं लघ्वङ्का ग्राह्याः । तस्मात् जहनिष्पत्तिर्वतनिष्पत्तिसमाना भविष्यति । दझनिष्पत्तिस्तकनिष्पत्तिसमानास्ति । अनयोर्निष्पत्त्योर्घातो वकनिष्पत्तिरस्ति । दहघातो लः कल्पितः । तस्मात् वतनिष्पत्तितुल्या जहनिष्पत्तिः अलनिष्पत्तिसमाना भविष्यति । दझनिष्पत्तितुल्या तकनिष्पत्तिर्लबनिष्पत्तितुल्या भविष्यति । तस्मात् वकनिष्पत्तिर्निष्पत्तिद्वयघातः अबनिष्पत्तिसमाना भविष्यति । इदमेवास्माकमिष्टम् ॥

अ, ६. ब, २०.
ल, १२.
ज, २. द, ३. ह, ४. झ, ५.
व, ३. त, ६. क, १०.

## अथ षष्ठं क्षेत्रम् ॥ ६ ॥

**यदि बहवोऽङ्का एकनिष्पत्तौ भवन्ति तत्र यदि प्रथमाङ्को द्वितीयं निःशेषं न करोति तदा कोऽप्यङ्कोऽग्रे निःशेषं न करिष्यति ।**

यथा अबजदहमेकनिष्पत्तौ कल्पितम् । अं बं निःशेषं न करोति । तस्मात् कोऽपि कमपि निःशेषं न करिष्यति । यदि जदहनिष्पत्तौ झवता लघ्वङ्का गृह्यन्ते

अ, १६. ब, २४. ज, ३६. द, ५४. ह, ८१
झ, ४. व, ६. त, ९.

---

[1] °निःशेषकमासीत् K.

तदा झतौ भिन्नाङ्कौ भविष्यतः । झं च यदि रूपं नास्ति तदा झवनिष्पत्तिर्जदनिष्पत्तेः समानास्ति । पुनर्जं दं निःशेषं न करोति तस्मात् झं वं निःशेषं न करिष्यति । रूपं च सर्वं निःशेषं करोति । पुनर्झं तं निःशेषं न करिष्यति । तस्मात् झतनिष्पत्तिर्जहनिष्पत्तिसमाना भविष्यति । इदमेवास्माकमिष्टम् ॥

## अथ सप्तमं क्षेत्रम् ॥ ७ ॥

**यावन्तोऽङ्का एकनिष्पत्तौ भवन्ति आद्याङ्कोऽन्त्याङ्कं निःशेषं करोति तदा आद्याङ्को द्वितीयाङ्कमपि निःशेषं करिष्यति ।**

यथा अबजदं चत्वारोऽङ्का एकनिष्पत्तौ कल्पिताः । अं दं निःशेषयति तदा बमपि निःशेषयति ।

अ, २. ब, ४. ज, ८. द, १६.

अस्योपपत्तिः ।

यदि वं निःशेषं न करिष्यति तदान्त्याङ्कमपि निःशेषं न करिष्यति । इदमेवास्माकमिष्टम् ॥

## अथाष्टमं क्षेत्रम् ॥ ८ ॥

**यावन्तोऽङ्का एकनिष्पत्तावङ्कद्वयमध्यगा[1] भवन्ति तयोर्निष्पत्तौ[2] यौ द्वावङ्कौ अन्यौ भविष्यतस्तयोरन्तर्गतास्तावन्त एवाङ्कास्तन्निष्पत्तौ भविष्यन्ति ।**

यथा अबयोर्मध्ये जदावङ्कौ पतितौ । एते चत्वारः अजनिष्पत्तौ जाताः । अबयोर्निष्पत्तौ हझावन्याङ्कौ कल्पितौ । अनयोर्मध्ये तथा द्वावङ्कौ पतिष्यतो यथैते चत्वारः अजनिष्पत्तौ भविष्यन्ति ।

अ, २. ज, ४. द, ८. ब, १६.
व, १. त, २. क, ४. ल, ८.
ह, ३. म, ६. न, १२. झ, २४.

---

१ °मध्यमा K. २ तन्निष्पत्तौ K.

अस्योपपत्तिः ।

अजदबानां निष्पत्तौ वतकला लघ्वङ्का गृहीताः । तस्मात् वलौ भिन्नौ भविष्यतः । अनयोर्निष्पत्तिः अबनिष्पत्तिसमानास्ति । हझनिष्पत्तेः समानास्ति । तस्मात् एतौ द्वौ हझं तुल्यं निःशेषं करिष्यतः । पुनस्तथाङ्कौ मनौ कल्पितौ यथा तं मं निःशेषं करिष्यति कं नमपि निःशेषं करिष्यति। तस्मात् वतकलनिष्पत्तौ हमनझा जाताः । अजदबानामपि निष्पत्तौ च जाताः । इदमेवास्माकमिष्टम् ॥

## अथ नवमं क्षेत्रम् ॥ ९ ॥

**यौ द्वौ भिन्नाङ्कौ तयोर्मध्यगा यावन्तोऽङ्का एकनिष्पत्तौ सन्ति तदा रूपतद्द्वयान्यतराङ्कयोर्मध्ये तावन्त एवाङ्का एकनिष्पत्तौ भविष्यन्ति ।**

यथा अबौ द्वौ भिन्नाङ्कौ कल्पितौ । अनयोर्मध्ये जदावङ्कौ कल्पितौ । एते सर्वे एकनिष्पत्तौ सन्ति । पुनर्हझौ लघ्वङ्कौ अजनिष्पत्तौ गृहीतौ । पुनस्तस्यामेव निष्पत्तौ वतका लघवस्त्रयोऽङ्का गृहीताः । एवं लमनसास्तस्यामेव निष्पत्तौ गृहीताः । तस्मादेतेऽङ्का अजदबसमाना भविष्यन्ति । हं हेन गुणितं फलं वं जातम् । पुनर्हवघातो लं जातम् । तस्माद्रूपं हं निःशेषं करिष्यति । हाङ्को वं निःशेषं करिष्यति । वं लं तुल्यं निःशेषं करिष्यति । अमपि निःशेषं करिष्यति । तस्मात् रूपअमध्ये च हवौ एकनिष्पत्तौ द्वावङ्कौ पतितौ । एवं रूपबयोर्मध्ये झकावङ्कौ एकनिष्पत्तौ पतितौ । इदमेवास्माकमिष्टम् ॥

अ, ८. ज, १२. द, १८ ब, २७
ह, २. झ, ३.
व, ४. त, ६. क, ९.
ल, ८. म, १२. न, १८. स, २७

## अथ दशमं क्षेत्रम् ॥ १० ॥

**अङ्कद्वयस्य प्रत्येकाङ्करूपयोर्मध्ये एकनिष्पत्तौ यावन्तोऽङ्का पतिष्यन्ति तदा तयोरङ्कयोर्मध्येऽपि तावन्त एवाङ्का एकनिष्पत्तौ पतिष्यन्ति ।**

यथा अबावङ्कौ कल्पितौ । लं रूपं कल्पितम् । अलयोर्मध्ये जदावङ्कावेकनिष्पत्तौ पतितौ यथा लबयोर्मध्ये हझावङ्कावेकनिष्पत्तौ कल्पितौ । तदा अबयोर्मध्येऽपि द्वावङ्कावेकनिष्पत्तौ पतिष्यतः ।

अस्योपपत्तिः ।

लजयोर्निष्पत्तिर्जदनिष्पत्तिसमानास्ति । लः जं जतुल्यं निःशेषयति । तदा जः दं जतुल्यं निःशेषं करिष्यति । तस्मात् दं जस्य वर्गो भविष्यति । पुनर्लः जं तथा निःशेषं करोति यथा दः अं निःशेषं करोति । तदा जदघातः अं भविष्यति ।

अ, ८. त, १२. क, १८. ब. २७.
द, ४. व, ६. झ, ९.
ज, २. ह, ३.
ल, १.

एवं हि झः हवर्गो भविष्यति । हझघातो बं भविष्यति । जहघातश्च वमस्ति । तदा दवझा एकनिष्पत्तौ भविष्यन्ति । पुनर्जहौ वगुणितौ कार्यौ । फलं तं कं भवति । तस्मात् अतकबा एकनिष्पत्तौ भविष्यन्ति । कुतः । जं दवाभ्यां गुणितं फलं अं तं दवनिष्पत्तौ जातम् । जहनिष्पत्तावपि जातम् । पुनर्जहौ वगुणितौ फलौ तकसंज्ञं तस्यामेव निष्पत्तौ जातम् । पुनर्हं वझगुणितं कं बं जातं वझनिष्पत्तौ जहनिष्पत्तावपि । इदमेवास्माकमिष्टम् ॥

## अथैकादशं क्षेत्रम् ॥ ११ ॥

**यौ द्वौ वर्गौ स्तस्तयोर्मध्ये यदि कोऽप्यङ्कस्तादृशो भवति यथैकनिष्पत्तौ त्रयोऽङ्का भवन्ति तदा तयोर्वर्गयोर्निष्पत्तिर्भुजयोर्निष्पत्तिवर्गो भवति ।**

यथा अबौ वर्गौ कल्पितौ । अनयोर्भुजौ जदौ कल्पितौ । जदयोर्घातः फलं हसंज्ञं भवति । तस्मात् अहनिष्पत्तिर्जदनिष्पत्तिसमाना भविष्यति । एवं हबनिष्पत्तिर्जदनिष्पत्तिसमाना भविष्यति । तस्मात् अबमध्ये हं पतितम् । तस्मादेकनिष्पत्तौ अहबा जाताः । अबनिष्पत्तिः

अ, ४. ह, ६. ब, ९.
ज, २. द, ३.

---

१ तथा K.

अहनिष्पत्तिवर्गतुल्या जदनिष्पत्तिवर्गतुल्या च जाता । इदमेवास्माकमिष्टम् ॥

## अथ द्वादशं क्षेत्रम् ॥ १२ ॥

**द्वयोर्घनयोर्मध्ये द्वावङ्कौ यदि तथा पततो यथा चतुर्णामङ्कानामेकनिष्पत्तिर्भवति तदा घनस्य स्वघनेन निष्पत्तिर्भुजनिष्पत्तिघनतुल्या भवति ।**

यथा अबौ घनौ कल्पितौ । जदौ च भुजौ कल्पितौ । जदाभ्यां हझवास्त्रयोऽङ्का एकनिष्पत्तौ भविष्यन्ति । तस्माज्जहघातः अं भविष्यति । दवघातश्च बं भविष्यति । पुनर्जदौ झगुणितौ कार्यौ फलं तकौ कल्पितौ । तस्मात् अतकबा अतनिष्पत्तौ जदनिष्पत्तावपि भविष्यन्ति । अबनिष्पत्तिर्जदनिष्पत्तिघनतुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

अ, ८. त, १२. क, १८. ब, २७.
ह, ४. झ, ६. व, ९.
ज, २. द, ३.

## अथ त्रयोदशं क्षेत्रम् ॥ १३ ॥

**येऽङ्का एकरूपनिष्पत्तौ भवन्ति तेषां वर्गा अप्येकरूपनिष्पत्तौ भवन्ति । तथा घना अप्येकरूपनिष्पत्तौ भवन्ति ।**

यथा अबजास्त्रयोऽङ्का एकनिष्पत्तौ कल्पिताः । दहझा एतेषां वर्गाः कल्पिताः । वतका घनाः कल्पिताः । यदि अं बेन गुण्यते तदा फलं लसंज्ञं भवति । बं जेन गुणितं मं भवति । तस्मात् दलहमझा एतेऽङ्का एकनिष्पत्तौ भविष्यन्ति । तस्मात् दहयोर्निष्पत्तिर्हझनिष्पत्तिसमाना भविष्यति । तस्मात् वर्गा अप्येकनिष्पत्तौ भविष्यन्ति । पुनरपि अं लहाभ्यां[1] गुण्यते तदा नसे फले भवतः । जं हमाभ्यां

अ, २. ब, ४. ज, ८.
द, ४. ल, ८. ह, १६. म, ३२. झ, ६४.
व, ८. न, १६. स, ३२. त, ६४. ग, १२८.
फ, २५६. क, ५१२.

---

१ हलाभ्यां D.

गुण्यते तदा फले गफे भवतः । तस्मात् वनसतगफका एते सप्ताङ्का एकरूपनिष्पत्तौ भविष्यन्ति । तस्मात् घना अप्येकरूपनिष्पत्तौ भविष्यन्ति । इदमेवास्माकमिष्टम् ॥

## अथ चतुर्दशं क्षेत्रम् ॥ १४ ॥

**ययोर्वर्गयोर्मध्ये एको द्वितीयवर्गं यदि निःशेषं करोति तदा तस्य भुजोऽपि द्वितीयस्य भुजं निःशेषं करिष्यति । यद्येकाङ्को द्वितीयाङ्कं निःशेषं करोति तदा तस्य वर्गस्तद्वर्गं निःशेषं करिष्यति ।**

यथा अवर्गः कल्पितः । अस्य भुजो जः कल्पितः । द्वितीयो वर्गो बः कल्पितः । तस्य भुजो दः कल्पितः । यदि अः बं निःशेषं करोति तदा जः दं निःशेषं करिष्यति ।

अस्योपपत्तिः ।

जं दगुणितं हं भवति । अहबा जदनिष्पत्तितुल्या जाताः । आद्योऽन्त्यं निःशेषं करोति । तस्मात् अः हं निःशेषं करिष्यति । तस्माज्जं दं निःशेषं करिष्यति ।

अ, ४. ह, ८. ब, १६.
ज, २. द, ४.

अहौ जदौ चैकनिष्पत्तौ स्तः । यदि जः दं निःशेषं करोति तदा अः हं निःशेषं करिष्यति । तस्मात् अः बं निःशेषं करिष्यति ।

अस्मादिदं निश्चितं यदि वर्गो वर्गं निःशेषं न करोति तदा भुजो भुजं निःशेषं न करिष्यति । यद्येकाङ्कोऽन्याङ्कं निःशेषं न करोति तदा तस्य वर्गोऽन्याङ्कवर्गं निःशेषं न करिष्यति ॥

## अथ पञ्चदशं क्षेत्रम् ॥ १५ ॥

**यद्येको घनो द्वितीयघनं निःशेषं करोति तदा तस्य भुजो द्वितीयभुजं निःशेषं करिष्यति । यत्रैकाङ्को द्वितीयाङ्कं निःशेषं करोति तदा तस्य घनोऽपि द्वितीयघनं निःशेषं करोति ।**

यथा अं घनः कल्पितः । जं भुजः कल्पितः । बः अन्यघनः कल्पितः । दस्तस्य भुजः कल्पितः । यदि अः बं निःशेषं करोति तदा जः दं निःशेषं करिष्यति ।

अस्योपपत्तिः ।

जदाभ्यां हवझास्त्रयोऽङ्का एकनिष्पत्तावुत्पादिताः । पुनर्जदौ वगुणितौ फलं तं कम् । तदा अतकबा जदनिष्पत्तावुत्पत्स्यन्ते । अं बं निःशेषं करोति । तस्मात् अः तमपि निःशेषं करोति[1] । जः दमपि निःशेषं करिष्यति ।

पुनर्जः दं निःशेषं कुर्यात् । तदा अः तं निःशेषं करिष्यति । तस्मात् अः बं निःशेषं करिष्यति । इदमेवास्माकमिष्टम् ॥

अ, ८. त, १६. क, ३२. ब, ६४
ह, ४. व, ८. झ, १६.
ज, २. द, ४.

अस्मादिदं निश्चितं यदि घनो घनं निःशेषं न करोति तदा तस्य भुजोऽन्यभुजं निःशेषं न करिष्यति । यद्येकाङ्कोऽन्याङ्कं निःशेषं न करोति तदा तस्य घनो द्वितीयघनं निःशेषं न करिष्यति ॥

## अथ षोडशं क्षेत्रम् ॥ १६ ॥

**ययोः सजातीयघातफलाङ्कयोर्मध्ये येद्येकाङ्कस्तथा[2] पतति यथैतत्त्रयमेकनिष्पत्तौ भवति तदा घातफलयोर्निष्पत्तिर्या भवति सा सजातीयतद्भुजनिष्पत्तिवर्गतुल्या भवति ।**

यथा सजातीयघातफले अबकल्पिते । अभुजौ जदौ कल्पितौ । बभुजौ हझौ कल्पितौ । जहनिष्पत्तिर्दझनिष्पत्तितुल्या भविष्यति । यदि दं हगुणितं वमुत्पन्नमिति कल्प्यते तदा अवबा एकनिष्पत्तौ भविष्यन्ति ।

अ, ६. व, १२. ब, २४.
ज, २. द, ३. ह, ४. झ, ६.

---

१ करिष्यति K. २ तथा एकाङ्को यदि पतति K.

अत्रोपपत्तिः ।

**दं जहाभ्यां** गुणितं फले **अबे** जाते । अनयोर्निष्पत्तिर्जहनिष्पत्तितुल्या भविष्यति । पुनर्हं **दझाभ्यां** गुणितं **वबे** उत्पन्ने । अनयोर्निष्पत्तिर्दझनिष्पत्तितुल्या भविष्यति । जहनिष्पत्तितुल्यापि भविष्यति । **अब**निष्पत्तिः **अव**निष्पत्तिवर्गतुल्यास्ति । जहनिष्पत्तिवर्गतुल्याऽपि भविष्यति । इदमेवाऽस्माकमिष्टम्[1] ॥ १६ ॥

## अथ सप्तदशं क्षेत्रम् ॥ १७ ॥

**सजातीययोर्घनफलयोर्मध्ये तादृशौ द्वावङ्कौ यदि तथा पततो यथा चतुर्णामङ्कानामेकनिष्पत्तिर्भवति घनफलस्य निष्पत्तिर्घनफलेन या भवति सा सजातीयभुजनिष्पत्तिघनतुल्या भवति ।**

यथा **अबे** सजातीये घनफले कल्पिते । **अ**भुजा **जदहाः** कल्पिताः । **ब**भुजा **झवताः** कल्पिताः। जझनिष्पत्तिर्दवनिष्पत्तितुल्यास्ति । हतनिष्पत्तितुल्याप्यस्ति । **जं** **द**गुणितं **क**मुत्पन्नम् । **झं** **व**गुणितं **ल**मुत्पन्नम् । तस्मात् **कलौ** सजातीयौ घातफलाङ्कौ भविष्यतः । अनयोर्मध्ये **मः** अङ्कः पतति तदा **कमला**स्त्रयोऽङ्का **जझ**निष्पत्तौ पतिष्यन्ति । पुनर्हतौ **म**गुणितौ **नसा**वुत्पन्नौ । एतयोर्निष्पत्तिर्हतनिष्पत्तितुल्या भविष्यति । **जझ**निष्पत्तितुल्यापि भविष्यति । अनयोर्निष्पत्तिः **कमल**निष्पत्तितुल्यास्ति । **जझ**निष्पत्तितुल्याप्यस्ति । तस्मात् **अनसबा**श्चत्वारोऽङ्का **जझ**निष्पत्तौ भविष्यन्ति । **अब**निष्पत्तिः **अन**निष्पत्तिघनतुल्यास्ति । **जझ**निष्पत्तिघनतुल्या भविष्यति । इदमेवास्माकमिष्टम् ॥

अ, ३०. न, ६०. स, १२०. ब, २४०.
क, ६. म, १२. ल, २४.
ज, २. द, ३. ह, ५.
झ, ४. व, ६. त, १०.

## अथाष्टादशं क्षेत्रम् ॥ १८ ॥

**द्वयोरङ्कयोर्मध्ये कश्चिदङ्कः पतति । यद्येतेऽङ्का एकनिष्पत्तौ भवन्ति तदा तौ द्वावङ्कौ सजातीयघातफले भविष्यतः ।**

---

[1] इदमेवास्मदिष्टम् K.

